१ श्रीमच्छांकरभाष्यम्।

**योनिर्येषां भूतानां तान्येतद्योनीनि भूतानि सर्वाणीत्येवमुपधारय जानीहि। यस्मान्मम प्रकृती योनिः**

२ आनन्दगिरिव्याख्या।

**सर्वाणि चेतनाचेतनानि जनिमन्तीत्यर्थः। सर्वभूतकारणत्वेन प्रकृतिद्वयमङ्गीकृतं चेत्कथमहमित्याद्युक्तमित्याशङ्क्याह— यस्मादिति। मम प्रकृती परमेश्वरस्योपाधितया स्थिते इत्यर्थः। तर्हि प्रकृतिद्वयं कारणमीश्वरश्चेति जगतोऽनेकविध-**

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

भूतानि चतुर्विधानि इत्येतदुपधारय सम्यग्जानीहि। किं पातञ्जलानामिव एते प्रकृती ईश्वरादन्ये इत्याशङ्क्याह— **अहमिति**। कृत्स्नस्य स्वस्वप्रकृतिसहितस्य जगतो जडाजडरूपस्य प्रभवः प्रभवत्यस्मादिति प्रभव उत्पत्तिकारणं,

४ मधुसूदनीव्याख्या।

नात्मकानि जनिमन्ति निखिलानीत्येवमुपधारय जानीहि। कार्याणां चिदचिद्ग्रन्थिरूपत्वात्तत्कारणमपि चिदचिद्ग्रन्थिरूपमनुमिन्वि-

५ भाष्योत्कर्षदीपिका।

न्तराभावाद्ब्रह्मणः कर्तृत्वं उपादानान्तराभावात्प्रकृतित्वम्। ब्रह्मणः कर्तृत्वप्रकृतित्वे हेत्वन्तरमाह—अभिध्येति। 'सोऽकामयत बहु स्यां प्रजायेयेति', 'तदैक्षत बहुस्यां प्रजायेयेति' चाभिध्यापूर्विकायाः स्वातन्त्र्यप्रवृत्तेः कर्तेति गम्यते। बहु स्यामिति प्रत्यगात्मविषयत्वात्। बहुभवनाभिध्यानस्य प्रकृतिरिति ब्रह्मणः प्रकृतित्वे हेत्वन्तरमाह—**साक्षादिति**। 'सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते आकाशे प्रत्यस्तं यान्ति' इति श्रुत्या साक्षाद्ब्रह्मैव कारणमुपादायोभयोः प्रभवप्रलययोराम्नानात्। यद्धि यस्मादुत्पद्यते यस्मिंश्च प्रलीयते तत्तस्योपादानं प्रसिद्धम्। यथा घटरुचकादेः मृत्सुवर्णादि। तत्रैव हेत्वन्तरमाह— **आत्मकृतेरिति**। 'तदात्मानं स्वयमकुरुत' इत्यात्मनः आत्मानमिति कर्मत्वस्य स्वयमकुरुतेति कर्तृत्वस्य च दर्शनात्। ननु पूर्वसिद्धस्य सतः कर्तृत्वेन व्यवस्थितस्य क्रियमाणत्वं कथमिति चेत्तत्राह—**परिणामादिति**। घटादिरूपेण मृदादिवत्पूर्वसिद्धस्यापि सत आत्मनो विशेषेणात्मना परिणामात्स्वयमिति विशेषणाच्च निमित्तान्तरानपेक्षत्वं च प्रतीयते परिणामादिति पृथक्सूत्रं वा। इतश्च ब्रह्म प्रकृतिः 'सच्च त्यच्चाभवन्निरुक्तं चानिरुक्तं च' इत्यादिना ब्रह्मणएव विकारात्मना परिणामाम्नानात्। तत्र हेत्वन्तरमाह—**योनिरिति**। 'कर्तारमीशं पुरुषं ब्रह्मयोनिम्' इति, 'यद्भूतयोनिं परिपश्यन्ति धीराः' इति च वेदान्तेषु हि यस्माद्योनिश्च ब्रह्म गीयते योनिशब्दश्च प्रकृतिवचनो लोके समधिगतः 'पृथिवी योनिरोषधिवनस्पतीनाम्' इति। यत्पुनरुक्तं ईक्षापूर्वकं कर्तृत्वं निमित्तकारणेष्वेव कुलालादिषु लोके दृष्टं नोपादानेषु' इत्यादि तत्प्रत्युच्यते। न लोकवदिह भवितव्यम्। नह्ययमनुमानगम्योऽर्थः शब्दगम्यता चास्यार्थस्यातो यथाशब्दमिह भवितव्यं शब्दश्चेक्षितुरीश्वरस्य प्रकृतित्वं प्रतिपादयतीत्यवोचाम। तथाचेश्वरकारणत्ववादिश्रुत्यनुसारिणीनां 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा', 'यत्तत्सूक्ष्ममविज्ञेयं', 'स ह्यन्तरात्मा भूतानां क्षेत्रज्ञश्चेति कथ्यते। तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम। अव्यक्तं पुरुषे ब्रह्मन्निर्गुणे संप्रलीयते ॥' अतश्च संक्षेपमिदं शृणुध्वं नारायणः सर्वमिदं पुराणः। स सर्गकाले च करोति सर्वं संहारकाले च तदत्ति भूयः ॥ तस्मात्काद्याः प्रभवन्ति सर्वे स मूलं शाश्वतिकः स नित्यः' इत्याद्यनेकासामीश्वरस्याभिन्ननिमित्तोपादानकारणतायाः प्रतिपादकानां स्मृतीनामेवार्थ उपादेयो नत्वचेतनं प्रधानं स्वतन्त्रं जगतः कारणम्। अण्वादयो जगत उपादानकारणमीश्वरस्तु निमित्तकारणमिति प्रतिपादकानां सांख्यादिस्मृतीनां गीतादिस्मृतीनां वेदानुरोधिनीनामुपादेयत्वावश्यकत्वेन तद्विरोधिनीनामेव हेयत्वौचित्यात्। ननु जगत उपादानं ब्रह्म नोपपद्यते चेतनादानन्दघनाच्छुद्धाद्ब्रह्मणोऽचेतनस्य सुखदुःखमोहात्मकस्य प्रीतिपरितापविषादादिहेतोः स्वर्गनरकाद्युच्चावचरूपस्याशुद्धस्यात्यन्तविलक्षणत्वाद्विलक्षणानां चोपादानोपादेयभावो लोके नैव दृश्यते। नहि घटादिकार्यं सुवर्णोपादानकं भवति न वा मुकुटादिकार्यं मृदुपादानकं तस्माज्जगत्सदृशमचेतनं प्रधानादिकमेव जगदुपादानमप्युपेयम्। 'तदैक्षत बहु स्याम्' इत्यादिचेतनकारणवादास्तु युक्तिविरोधादचेतनप्रधानपरतया उपचारादीश्वरस्य निमित्तत्वमात्रपरतया वा नेया अचेतनेपि चेतनवदुपचारदर्शनात्। यथा 'मृदब्रवीदापोऽब्रुवन्' इति 'तत्तेज ऐक्षत ता आपः ऐक्षन्त ते हेमे प्राणा अहंश्रेयसे विवदमाना ब्रह्म जग्मुः' इति 'ते ह वाचमूचुस्त्वन्न उद्गाय' इत्यादिषु श्रुतिषु लोकेऽपि प्रत्यासन्नपतनतां कूलस्यालक्ष्य कूलं पिपतिषतीत्यचेतनेपि चेतनवदुपचारो दृष्ट इति चेदुच्यते। किं यत्किंचिद्वैलक्षण्याज्जगदीश्वरोपादानकं नोपपद्यते उत बहुवैलक्षण्यात्। नाद्यः। चेतनायतनाच्छरीरात्तदनायतनाद्रोमयाच्चातद्विधस्य केशादेः वृश्चिकस्य चोत्पत्तिदर्शनात्। न द्वितीयः। उदाहृतप्रकृतिविकारयो रूपादिभेदेन बहुवैलक्षण्यस्योपलभ्यमानत्वात्। किंच ययोः प्रकृतिविकारभावस्तयोः सादृश्यं किमात्यन्तिकं उत यत्किंचिदाद्ये प्रकृतिविकारभाव एव प्रलीयते। द्वितीयेतु शरीरादीनां पार्थिवत्वादिस्वभावस्य केशादिष्वनुवृत्तिरिव ब्रह्मणोऽपि सत्तालक्षणस्य स्वभावस्याकाशादावनुवृत्तिर्दृश्यत इति नानुपपत्तिः। किं चेश्वरकारणत्वनिषेधकं वैलक्षण्यं किमशेषस्येश्वरस्वभावस्याननुवर्तनं उत यस्य कस्यचित् उत चैत-

६ श्रीधरीव्याख्या।

प्रकृती योनी कारणभूते येषां तान्येतद्योनीनि स्थावरजंगमात्मकानि सर्वाणि भूतानीत्युपधारय बुध्यस्व। तत्र जडा प्रकृतिर्देहरूपेण परिणमते। चेतना तु मदंशभूता भोक्तृत्वेन देहेषु प्रविश्य स्वकर्मणा तानि धारयति। ते च मदीये प्रकृती मत्तः संभूते। अतोऽहमेव

**मत्तः परतरं नान्यत्किंचिदस्ति धनंजय ।**
**मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ७ ॥**

१ श्रीमच्छांकरभाष्यम् ।

कारणं सर्वभूतानामतोऽहं कृत्स्नस्य समस्तस्य जगतः प्रभव उत्पत्तिः प्रलयो विनाशस्तथा प्रकृतिद्वयद्वारेणाहं सर्वज्ञ ईश्वरो जगतः कारणमित्यर्थः ॥ ६ ॥ यतस्तस्मात् मत्तः परमेश्वरात्परतरमन्य-

२ आनन्दगिरिव्याख्या ।

कारणाङ्गीकरणं स्यादित्याशङ्क्याह—प्रकृतीति । अपरप्रकृतेरचेतनत्वात्परप्रकृतेश्चेतनत्वेऽपि किंचिज्ज्ञत्वादीश्वरस्यैव सर्वकारणत्वं युक्तमित्याह—सर्वज्ञ इति ॥ ६ ॥ प्रधानात्परतोऽक्षरात्पुरुषवत्परमात्मनोऽपि परादन्यत्परं स्यादित्याशङ्क्य प्रकृतिद्वयद्वारा सर्वकारणत्वमीश्वरस्योक्तमुपजीव्य परिहरति—यतस्तस्मादिति । नान्यदस्ति परमित्यत्र हेतुमाह—

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

तथा प्रलीयतेऽस्मिन्निति प्रलयो लयस्थानं च । अतस्ते उभे अपि प्रकृती मत्तो नातिरिच्येते ॥ ६ ॥ एवमेकविज्ञानात्सर्वविज्ञानं प्रकृतमात्मनो जगदुपादानत्वेनोपपाद्य तत एवात्मनो निर्विकारत्वहाने प्राप्ते आह—

४ मधुसूदनीव्याख्या ।

त्यर्थः । एवं क्षेत्रक्षेत्रज्ञलक्षणे ममोपाधिभूते यतः प्रकृती भवतस्ततस्तद्द्वाराहं सर्वज्ञः सर्वेश्वरोऽनन्तशक्तिर्मायोपाधिः कृत्स्नस्य चराचरात्मकस्य जगतः सर्वस्य कार्यवर्गस्य प्रभव उत्पत्तिकारणं प्रलयस्तथा विनाशकारणम् स्वाप्निकस्येव प्रपञ्चस्य मायिकस्य मायाश्रयत्वविषयत्वाभ्यां मायाव्यहमेवोपादानं द्रष्टा चेत्यर्थः ॥ ६ ॥ यस्मादहमेव मायया सर्वस्य जगतो जन्मस्थितिभङ्गहेतुस्तस्मा-

५ भाष्योत्कर्षदीपिका ।

न्यस्य आद्यपक्षद्वये उक्तमेव हेतुद्वयमनुसंधेयम् । न तृतीयः । समस्तस्य वस्तुजातस्येश्वरप्रकृतिकत्ववादिनंप्रति यच्चैतन्येनानन्वितं तदनीश्वरप्रकृतिकं दृष्टमिति वक्तुमशक्यत्वेन दृष्टान्ताभावात् । ननु यदि चेतनं शुद्धं शब्दादिहीनं ब्रह्म तद्विपरीतस्याचेतनस्याशुद्धस्य स्थूलत्वसावयवत्वपरिच्छिन्नत्वादिधर्मकस्य शब्दादिमतश्च कार्यस्य कारणमिष्यते, तर्हि प्रागुत्पत्तेः कार्यासत्त्वप्रसङ्गस्य सत्कार्यवादिनस्तवानिष्टस्यापत्तिः । किंच प्रलये ईश्वरेणाविभागमापद्यमानं कार्यं स्वीयेन धर्मेण कारणमपि दूषयेदिति ब्रह्मणोऽप्यशुद्ध्यादिमत्त्वप्रसङ्गः । अपिचास्मिन्नीश्वरकारणवादेऽपरमप्यसमंजसम् । सर्वस्य विभागस्याविभागगतस्य पुनरुद्भवे नियमकारणाभावाद्भोक्तृभोग्यादिविभागेनोत्पत्तिर्न प्राप्नोतीति । किंच सर्वेषां भोक्तॄणां ब्रह्मणैक्यप्राप्तानां कर्मादिनिमित्तप्रलयेऽपि पुनरुत्पत्तिस्वीकारे मुक्तानामपि पुनरुत्पत्तिप्रसङ्गः । यदीदं जगत्प्रलये विभक्तमेव तिष्ठतीतिचेत्प्रलयस्यैवासंभवापत्तिरिति चेदुच्यते । यथेदानीं कार्यं कारणात्मना सत्तथा प्रागुत्पत्तेरपीति गम्यते । यत्तूक्तं प्रलय ईश्वरेणाविभागमापन्नमित्यादि तन्न । न दूषयतीत्यत्र दृष्टान्तस्य सत्त्वात्तथा घटादयो मृदादिप्रकृतिका विकारा विभागावस्थायामुच्चावचमध्यमप्रभेदाः सन्तः पुनः कारणाविभागमापन्ना न कारणं स्वधर्मेण दूषयन्ति कारणे कार्यस्य स्वधर्मेण स्थित्यभ्युपगमप्रसङ्गाच्च । किंच कार्यस्य कारणानन्यत्वं न प्रलये एवापितु त्रिष्वपि कालेषु 'आत्मैवेदं सर्वं', 'ब्रह्मैवेदं सर्वं पुरस्तात्', 'सर्वं खल्विदं ब्रह्म' इत्येवमादिश्रुतिष्वविशेषेण कार्यस्य कारणानन्यत्वश्रवणात् । कार्यस्य कारणानन्यत्वेऽपि यथा स्वयं प्रसारितया मायया मायावी त्रिष्वपि कालेषु न संस्पृश्यते तस्या अवस्तुत्वात्, तथा परमात्मापि संसारमायया न संस्पृश्यत इति कल्पितस्य गुणेन दोषेण वाधिष्ठानस्यान्यथात्वायोगात् । यदपि सर्वस्य विभागस्येत्यादि तदपि न । यथा सुषुप्तिसमाध्यादावपि स्वाभाविक्यामविभागप्राप्तौ सत्यां मिथ्याज्ञानस्यानपोदितत्वात् । पुनः प्रबोधे पूर्ववद्विभागो भवत्येवमिहापि भविष्यतीत्यदोषात् । एतेन मुक्तानां पुनरुत्पत्तिप्रसङ्गः प्रत्युक्तः सम्यग्ज्ञानेन मिथ्याज्ञानस्यापोदितत्वात् । किंच शब्दादिहीनात्प्रधानादेः शब्दादिमतो जगतो वैलक्षण्यान्न जगत्प्रधानादिप्रकृतिकमिति विलक्षणत्वान्नेदं जगत् ब्रह्मप्रकृतिकमित्याद्युक्तदोषाणां प्रधानादिकारणवादेऽपि तुल्यत्वादस्मिन्पक्षे न शङ्कितव्याः । तस्मादीश्वरकारणवाद एव युक्तियुक्तः श्रुतिस्मृतीतिहासपुराणतात्पर्यसिद्धः सर्वैर्मुमुक्षुभिरभ्युपेयः । एतेन चेतनकर्तृकमपीक्षणं प्रधानादावौपचारिकं 'मृदब्रवीत्' इत्यादिवदिति प्रत्युक्तम् । मुख्यसंभवे औपचारिकाश्रयणानौचित्यात् । 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इति ईक्षितुर्जीवात्मभावेन प्रवेशश्रवणाच्च । मृदब्रवीदित्येवंजातीयकया श्रुत्यापि मृदाद्यभिमानिन्यो वागाद्यभिमानिन्यश्च चेतना देवता वदनसंवदनादिषु चेतनोचितव्यवहारेषु व्यपदिश्यन्ते । कूलं पिपतिषतीत्यत्रापि कूलस्य पतनेच्छाचेतनरूपाधिष्ठानापेक्षाप्रकृतित्वं चेश्वरस्य 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' इति सूत्रे साधितमेवेति स्पष्टं चेदमाकरे ॥ ६ ॥ यस्मादेवं तस्मान्मत्तः परमेश्वरात्परतरमन्यत्कारणा-

६ श्रीधरीव्याख्या ।

कृत्स्नस्य सप्रकृतिकस्य जगतः प्रभवः प्रकर्षेण भवत्यस्मादिति प्रभवः । परं कारणमहमित्यर्थः । तथा प्रलीयतेऽनेनेति प्रलयः संहर्ताप्यहमेवेति भावः ॥ ६ ॥ यस्मादेवं तस्मात्—मत्त इति । मत्तः सकाशात्परतरं श्रेष्ठं जगतः सृष्टिसंहारयोः स्वतन्त्रं कारणं किंचिदपि

७ अभिनवगुप्ताचार्यव्याख्या ।

दृश्यादि ॥ ४ ॥ ५ ॥ एतदिति । उपधारय अभ्यासा(हिता)नुभवक्रमेणात्मसमीपे कुरु ॥ ६ ॥ मत्त इत्यादि अव्ययमित्यन्तम् । दुर्बब

१ श्रीमच्छांकरभाष्यम्।

**त्कारणान्तरं किंचिन्नास्ति न विद्यते। अहमेव जगत्कारणमित्यर्थः। हे धनंजय, यस्मादेवं तस्मान्मयि**

२ आनन्दगिरिव्याख्या।

**मयीति**। परतरशब्दार्थमाह—**अन्यदिति**। स्वातन्त्र्यव्यावृत्त्यर्थमन्तरशब्दः। निषेधफलं कथयति—**अहमेवेति**। सर्वजगत्कारणत्वेन सिद्धमर्थं द्वितीयार्धव्याख्यानेन विशदयति—**यस्मादिति**। अतो (यथा) दीर्घेषु तिर्यक्षु च

३ नीलकण्ठव्याख्या (चतुर्धरी)।

**मत्त इति**। कारणान्मृदादेः परं पृथग्भूतं घटादि, व्यवहारे तयोर्भेदानुभवात्। परतरं तु गवाश्वादि मृदनुपादानकत्वात्। एवं ब्रह्मणः परतरं तदनुपादानकं किंचिदपि नास्ति। हे धनंजय, एवं प्रपञ्चे ब्रह्माव्यतिरेकं प्रदर्श्य ब्रह्मणि प्रपञ्चव्यतिरेकं सदृष्टान्तमाह—**मयीति**। मयि सद्रूपेण स्फुरणरूपेण च सूत्रवत्सर्वत्रानुस्यूते यदिदं सर्वं मणिगण-

४ मधुसूदनीव्याख्या।

त्परमार्थतः—निखिलदृश्याकारपरिणतमायाधिष्ठानात्सर्वभासकान्मत्तः सद्रूपेण स्फुरणरूपेण च सर्वानुस्यूतात्स्वप्रकाशपरमानन्दचैतन्यघनात्परमार्थसत्यात्स्वप्रदृश इव स्वाप्निकं मायाविन इव मायिकं शुक्तिशकलावच्छिन्नचैतन्यादिवत्तदज्ञानकल्पितं रजतं परतरं परमार्थसत्यमन्यत्किंचिदपि नास्ति। हे धनंजय, मयि कल्पितं परमार्थतो न मत्तो भिद्यत इत्यर्थः। 'तदनन्यत्वमारम्भण-

५ भाष्योत्कर्षदीपिका।

न्तरं किंचिन्नास्ति न विद्यते अहमेव सर्वस्मात्परः जगत्कारणमित्यर्थः। परतराभावप्रदर्शनेन परम्। अतः 'सेतून्मानसंबन्धभेदव्यपदेशेभ्यः' इति सूत्रोक्ताशङ्कापि परिहृता। परमेश्वरात्परमन्यदस्ति। कुतः 'अयमात्मा स सेतुः' इति सेतोश्चतुष्पादित्याद्युन्मानस्य 'सता सोम्य तदा संपन्नो भवति' इति संबन्धस्य 'अथ य एषोऽन्तरादित्ये', 'य एषोऽन्तरक्षिणि' इति भेदस्य व्यपदेशेभ्य इति तदर्थः। तथाच सिद्धान्तसूत्राणि 'सामान्यात्तु बुद्ध्यर्थः पादवत्', 'स्थानविशेषात्प्रकाशादिवत्', 'उपपत्तेश्च तथान्यप्रतिषेधात्', 'अनेन सर्वगतत्वमायामशब्दादिभ्यः' इति। तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः। न ब्रह्मणोऽन्यत्किंचिद्भवितुमर्हति प्रमाणाभावात्। नह्यन्यस्यास्तित्वे किंचित्प्रमाणमुपलभामहे। सर्वस्य हि जनिमतो वस्तुजातस्य जन्मादि ब्रह्मणो भवतीति निर्धारितमनन्यत्वं च कारणात्कार्यस्य। नच ब्रह्मव्यतिरिक्तं किंचिदजं संभवति 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इत्यवधारणादेकविज्ञानेन च सर्वविज्ञानप्रतिज्ञानान्न ब्रह्मव्यतिरिक्तवस्त्वस्तित्वमवकल्पते। ननु सेत्वादिव्यपदेशो ब्रह्मव्यतिरिक्तत्वं सूचयतीत्युक्तं तत्प्रत्युच्यते। सेतुसामान्यात्सेतुशब्द आत्मनि प्रयुक्त इति श्लिष्यते जगतस्तन्मर्यादानां च विधारकत्वं सेतुसामान्यमात्मनोऽतः सेतुरिव सेतुरिति प्रकृत आत्मा स्तूयते। सेतुं तीर्त्वेत्यपि तरतेरतिक्रमासंभवात्प्राप्तेरर्थे एव वर्तते यथा व्याकरणं तीर्ण इति प्राप्त उच्यते—नातिक्रान्तस्तद्वत् उन्मादव्यपदेशोऽपि न ब्रह्मव्यतिरिक्तवस्त्वस्तित्वप्रतिपत्त्यर्थः किंतु बुद्ध्यर्थ उपासनार्थः पादवत्। यथा मनआकाशयोरध्यात्ममधिदैवतं च ब्रह्मप्रतीकयोराम्नातयोश्चत्वारो वाक्प्राणचक्षुःश्रोत्राणीति मनःसंबन्धिनः पादाः कल्पिताः चत्वारश्चाग्निवायुसूर्यदिशः आकाशसंबन्धिनः आध्यानाय तद्वत्। यद्वा व्यवहाराय कार्षापणपादविभागकल्पनावत्। यदप्युक्तं संबन्धव्यपदेशाद्भेदव्यपदेशाच्च परमेश्वरात्परमिति तदप्यसत्। यत एकस्यापि स्थानविशेषापेक्षयैतौ व्यपदेशावुपपद्येते। संबन्धव्यपदेशे तावदयमर्थः बुद्ध्याद्युपाधिस्थानविशेषयोगात्। स्वप्नजागरयोर्विज्ञानस्योपाध्युपशमे सुषुप्तौ य उपशमः स परमात्मना संबन्ध इत्युपाध्यपेक्षयोपचर्यते न मितत्वापेक्षया, तथा भेदव्यपदेशोऽपि ब्रह्मण उपाधिभेदापेक्षयैव न स्वरूपभेदापेक्षया। तत्र दृष्टान्तमाह प्रकाशवत्। यथैकस्यैव सौर्यादिप्रकाशस्य सूचीपाशादिषूपाध्यपेक्षयैव संबन्धभेदव्यपदेशौ तद्वत् मुख्यएव संबन्धादिः किं न स्यादित्याशङ्क्याह। उपपत्तेश्च उपचारस्यैवोपपत्तेश्च। एवं सेत्वादिव्यपदेशान्परपक्षे हेतूनुन्मथ्य संप्रति स्वपक्षं हेत्वन्तरेणोपसंहरति। तथान्यप्रतिषेधादपि न ब्रह्मणः परं वस्त्वन्तरमस्तीति गम्यते। तथाहि 'स एवाधस्तादहमेवाधस्तादात्मैवाधस्तात्स एवोपरिष्टात्', 'सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद ब्रह्मैवेदं सर्वमात्मैवेदं सर्वं नेह नानास्ति किंचन', 'यस्मात्परं नापरमस्ति किंचित्', 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्' इत्येवमादीनि स्वप्रकरणस्थानि अन्यार्थत्वेन परिणेतुमशक्यानि ब्रह्मव्यतिरिक्तं वस्त्वन्तरं वारयन्ति। सर्वान्तरश्रुतेश्च न परमात्मनोऽन्तरोऽन्य आत्मास्तीत्यवधार्यते। अनेन सेत्वादिव्यपदेशनिराकरणेनान्यप्रतिषेधसमाश्रयणेन च सर्वगतत्वमप्यात्मनः सिद्धं भवति। सर्वगतत्वं चायामशब्दादिभ्यो विज्ञायते। आयामशब्दो व्यापिवचनः। 'यावान्वायमाकाशस्तावानेषोऽन्तर्हृदय आकाशः', 'आकाशवत्सर्वगतश्च नित्यः', 'ज्यायान्दिवो ज्यायानन्तरिक्षात्', 'नित्यः सर्वगतः स्थाणुः' इत्येवमादयो हि श्रुतिस्मृतिन्यायाः सर्वगतत्वमात्मनो बोधयन्तीति दिग्विजये उत्तरगोग्रहे च राज्ञो भीष्मादींश्च विजित्य धनमाहृतवतस्त्वत्तः परतर एतादृशकर्मकर्ताऽन्यो यथा नास्ति तथा मत्तः परमन्यज्जगत्कारणं नास्तीति ध्वनयन्संबोधयति—**धनंजयेति**। यत एवं तस्मान्मयि परमेश्वरे सर्वमिदं कार्यकारणा-

६ श्रीधरीव्याख्या।

नास्ति। स्थितिहेतुरप्यहमेवेत्याह—**मयीति**। मयि सर्वमिदं जगत्प्रोतं ग्रथितं आश्रितमित्यर्थः। दृष्टान्तः स्पष्टः॥ ७॥ जगतः स्थिति-

७ अभिनवगुप्ताचार्यव्याख्या।

त्वमेवोपधारय यदहं वासुदेवो भूतः सर्वस्य प्रभवः प्रलयश्च। सूत्रे मणिगणा इव यथा तन्तुरनवध्रियमाणरूपोऽप्यन्तर्लीनतया स्थितः

## रसोऽहमप्सु कौन्तेय प्रभास्मि शशिसूर्ययोः ।
## प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥ ८ ॥

१ श्रीमच्छांकरभाष्यम् ।

**परमेश्वरे सर्वाणि भूतानि सर्वमिदं जगत्प्रोतमनुस्यूतमनुगतमनुविद्धम्। ग्रथितमित्यर्थः । दीर्घत-न्तुषु पटवत्सूत्रे च मणिगणा इव ॥ ७ ॥ केन केन धर्मेण विशिष्टे त्वयि सर्वमिदं प्रोतमित्युच्यते— रसोऽहमपां यः सारः स रसस्तस्मिन्रसभूते मय्यापः प्रोता इत्यर्थः । एवं सर्वत्र । यथाहमप्सु रस एवं प्रभास्मि शशिसूर्ययोः । प्रणव ओंकारः सर्ववेदेषु तस्मिन्प्रणवभूते मयि सर्वे वेदाः प्रोताः ।**

२ आनन्दगिरिव्याख्या ।

पटघटितेषु तन्तुषु पटस्यावगतिरवगम्यते तद्वन्मय्येवानुगतं जगदित्याह—**दीर्घेति** । यथा च मणयः सूत्रेऽनुस्यूता-स्तेनैव ध्रियन्ते तदभावे विप्रकीर्यन्ते यथा मयैवात्मभूतेन सर्वं व्याप्तं ततो निकृष्टं विनष्टमेव स्यादिति श्लोकोक्तं दृष्टान्तमाह—**सूत्र इति** ॥ ७ ॥ अबादीनां रसादिषु प्रोतत्वप्रतीतेस्त्वय्येव सर्वं प्रोतमित्ययुक्तमिति मत्वा पृच्छति—**केनेति** । तत्रोत्तरमुत्तरग्रन्थेन दर्शयति—**उच्यत इति** । सारो मधुरो हेतुरिति यावत् । रसोऽहमिति कथं तत्राह—**तस्मिन्निति** । अप्सु यो रसः सारस्तस्मिन्मयि मधुररसे कारणभूते प्रोता आप इतिवदुत्तरत्र सर्वत्र व्याख्यानं कर्तव्य-मित्याह—**एवमिति** । उक्तमर्थं दृष्टान्तं कृत्वा प्रभास्मीत्यादि व्याचष्टे—**यथेति** । चन्द्रादित्ययोर्या प्रभा तद्भूते मयि तौ प्रोतावित्यर्थः । तत्र वाक्यार्थं । कथयति—**तस्मिन्निति** । प्रणवभूते तस्मिन्वेदानां प्रोतत्ववदाकाशे यः

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

यत्परस्परव्यावृत्तं तत्प्रोतं तेन व्यावृत्तेभ्योऽनुवृत्तं भिन्नमिति न्यायेन प्रपञ्चातीतोऽहमतो न मम विकारित्वमित्यर्थः ॥ ७ ॥ नन्वेवं प्रपञ्चपरमात्मनोर्मणिसूत्रवदुपादानोपादेयभावोऽपि न स्यात् । नहि उपादानं चाननुवृत्तं चेति घटते मृद्घटादावदर्शनादित्याशङ्क्य स्वप्नमायेन्द्रजालरज्जूरगतुल्यत्वं प्रपञ्चस्योपपाद्योभयमप्यविरुद्धमित्युपदिष्टं चेदयमकस्मादु-द्विग्नो भविष्यतीति मत्वा दृष्टान्तान्तरैरेवानुवृत्तिं व्यावृत्तिं चिज्जडयोर्दर्शयति—**रस इति** । यथा रसोऽप्सु एकमप्य-

४ मधुसूदनीव्याख्या ।

शब्दादिभ्यः' इति न्यायात् । व्यवहारदृष्ट्या तु मयि सद्रूपे स्फुरणरूपे च सर्वमिदं जडजातं प्रोतं ग्रथितं मत्सत्तया सदिव मत्स्फुरणेन च स्फुरदिव व्यवहाराय मायामयाय कल्प्यते । सर्वस्य चैतन्यग्रथितत्वमात्रे दृष्टान्तः सूत्रे मणिगणा इवेति । अथवा सूत्रे तैजसात्मनि हिरण्यगर्भे स्वप्नदृशि स्वप्नप्रोता मणिगणा इवेति सर्वांशे दृष्टान्तो व्याख्येयः । अन्ये तु 'परमतः सेतून्मानसंब-न्धभेदव्यपदेशेभ्यः' इति सूत्रोक्तस्य पूर्वपक्षस्योत्तरत्वेन श्लोकमिमं व्याचक्षते । मत्तः सर्वज्ञात्सर्वशक्तेः सर्वकारणात्परतरं प्रशस्यतरं सर्वस्य जगतः सृष्टिसंहारयोः स्वतन्त्रं कारणमन्यन्नास्ति । हे धनंजय, यस्मादेवं तस्मान्मयि सर्वकारणे सर्वमिदं कार्यजातं प्रोतं ग्रथितं नान्यत्र । सूत्रे मणिगणा इवेति दृष्टान्तस्तु ग्रथितत्वमात्रे नतु कारणत्वे । कनककुण्डलादिवदिति तु योग्यो दृष्टान्तः ॥ ७ ॥ अबादीनां रसादिषु प्रोतत्वप्रतीतेः कथं त्वयि सर्वमिदं प्रोतमिति च न शङ्क्यम्, रसादिरूपेण ममैव स्थितत्वा-दित्याह पञ्चभिः—रसः पुण्यो मधुरस्तन्मात्ररूपः सर्वासामपां सारः कारणभूतो योऽप्सु सर्वास्वनुगतः सोऽहं हे कौन्तेय,

५ भाष्योत्कर्षदीपिका ।

त्मकं जगत्प्रोतं ग्रथितं यथा सूत्रे मणिगणा ग्रथितास्तद्वत् । अनेन स्थितिहेतुत्वमपि स्वस्यैव दर्शितम् । केचित्तु यस्मादहमेव मायया सर्वस्य जगतो जन्मस्थितिभङ्गहेतुस्तस्मात्परमार्थतो निखिलदृश्याकारपरिणतमायाधिष्ठानात्परमार्थसत्यात्परतरं परमार्थ-सत्यं अन्यत्किंचिन्नास्ति । मयि कल्पितं परमार्थतो मत्तो न भिद्यत इत्यर्थः । 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इति न्यायात् । व्यवहारदृष्ट्या तु मयि सद्रूपे स्फुरणरूपे च सर्वमिदं जडजातं प्रोतं ग्रथितं मत्सत्तया सदिव मत्स्फुरणेन स्फुरदिव व्यवहाराय मायामयाय कल्पते । सर्वस्य चैतन्यग्रथितत्वमात्रे दृष्टान्तः सूत्रे मणिगणा इव । अथवा सूत्रे तैजसात्मनि हिरण्यगर्भे स्वप्नदृशि स्वप्नप्राप्ता मणिगणा इव इति सर्वांशेऽपि दृष्टान्तो व्याख्येय इति वर्णयन्ति । अस्मिन्पक्षे 'नेह नानास्ति किंचन' इतिवन्म-त्तोऽन्यत्किंचिन्नास्तीत्येतावतैव मत्तः परमार्थसतोऽन्यद्भिन्नं किंचिद्वस्तु परमार्थसन्नास्तीत्यर्थस्य निर्वाहे मयि सर्वमिदं कल्पितं मनसि स्वप्नपदार्था इवेति वक्तव्ये परतरपदस्य प्रयोजनं प्रोतमित्यादेः स्वारस्यं च चिन्त्यम् ॥ ७ ॥ नन्वबादीनां रसादिषु प्रोत-त्वप्रतीतेस्त्वय्येव सर्वं कथं प्रोतमित्याशङ्क्य रसादिरूपे मय्येवाबादिकं प्रोतमित्याह—**रस इति** । 'अपां यः सारो रसः पुण्यो

६ श्रीधरीव्याख्या ।

हेतुत्वं प्रपञ्चयति—**रसोऽहमिति पञ्चभिः** । अप्सु रसोऽहम् । रसतन्मात्ररूपया विभूत्या तदाश्रयत्वेनाप्सु स्थितोऽहमित्यर्थः । तथा

७ अभिनवगुप्ताचार्यव्याख्या ।

एवमहं सर्वत्र ॥ ७ ॥ अप्स्विति सर्वत्रास्वाद्यमानयोरनुद्भिन्नमधुरादिविभागः सामान्यः सोऽहम् । एवं प्रकाशो मृदुत्वचण्डत्वादिरहितः । खे आकाशे यः शब्द इति सर्वस्यैव शब्दस्य नभोगुणत्वादत्रावधारणम् । यः केवलगगनगुणतया ध्वनिः संयोगविभागादिसामग्र्यन्तररहितोऽ-

१ मधुसूदनः ।

**पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ ।**
**जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥ ९ ॥**

१ श्रीमच्छांकरभाष्यम् ।

तथा ख आकाशे शब्दः सारभूतस्तस्मिन्मयि खं प्रोतम् । तथा पौरुषं पुरुषस्य भावो यतः पुंबुद्धिर्नृषु तस्मिन्मयि पुरुषाः प्रोताः ॥ ८ ॥ पुण्य इति । पुण्यः सुरभिर्गन्धः पृथिव्यां चाहं तस्मिन्मयि गन्धभूते पृथिवी प्रोता । पुण्यत्वं गन्धस्य स्वभावत एव पृथिव्यां दर्शितमबादिषु रसादेः पुण्यत्वोपलक्षणार्थम् । अपुण्यत्वं तु गन्धादीनामविद्याधर्माद्यपेक्षं संसारिणां भूतविशेषसंसर्गनिमित्तं भवति ।

२ आनन्दगिरिव्याख्या ।

सारभूतः शब्दस्तद्रूपे परमेश्वरे प्रोतमाकाशमित्याह—**तथेति** । पौरुषं नृष्विति भागं पूर्ववद्विभजते—**तथेत्यादिना** । पुरुषत्वमेव विशदयति—**यत इति** । पुंस्त्वसामान्यात्मके परस्मिन्नीश्वरे प्रोतास्तद्विशेषास्तदुपादानत्वेन तत्स्वभावत्वादित्यर्थः ॥ ८ ॥ मयि सर्वमिदं प्रोतमित्यस्यैव परिमाणार्थं प्रकारान्तरमाह—**पुण्य इति** । पृथिव्यां पुण्यशब्दितो यः सुरभिगन्धः सोऽहमस्मीत्यत्र वाक्यार्थं कथयति—**तस्मिन्निति** । कथं पृथिव्यां गन्धस्य पुण्यत्वं तत्राह—**पुण्यत्वमिति** । यत्तु पृथिव्यां गन्धस्य स्वाभाविकं पुण्यत्वं दर्शितं तदबादिषु रसादेरपि स्वाभाविकपुण्यत्वस्योपलक्षणार्थमित्याह—**पृथिव्यामिति** । प्रथमोत्पन्नाः पञ्चापि गुणाः पुण्या एव सिद्धादिभिरेव भोग्यत्वादिति भावः । कथं तर्हि गन्धादीनामपुण्यत्वप्रतिभानं तत्राह—**अपुण्यत्वं त्विति** । तदेव स्फुटयति—**संसारिणामिति** । गन्धादयः स्वकार्यैर्भूतैः सह परिणममानाः प्राणिनां पापादिवशादपुण्याः संपद्यन्त इत्यर्थः । यच्चाग्नेस्तेजस्तद्भूते मयि

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

प्परमाणुमपरित्यज्यानुस्यूतो दृश्यतेऽतो रसरूपे मयि आपः प्रोताः, एवं प्रभायां चन्द्रादयः प्रोताः, प्रणवे सर्वे वेदाः प्रोताः 'तद्यथा शङ्कुना सर्वाणि पर्णानि संतृण्णान्येवमोंकारेण सर्वा वाक् संतृण्णा' इति वाङ्मात्रे प्रणवानुस्यूतिश्रवणात् । संतृण्णानि संग्रथितानि । एवमाकाशे शब्दः सारभूतस्तस्मिन्मयि खं प्रोतम् । सर्वपुरुषेषु सारं पौरुषं शौर्यधैर्यादिरूपं तत्र पुरुषाः प्रोताः । एवमग्रेऽपि द्रष्टव्यम् ॥ ८ ॥ **पुण्य इति** । रसादिष्वपि द्रष्टव्यम् । अपुण्यस्य सर्वस्याविद्यामात्रविलसितत्वात् । विभावसौ वह्नौ तेजः दहनशक्तिः । जीवन्त्यनेनेति जीवनमन्नं विराजम् । तत्र हि सर्वाणि भूतानि प्रोतानि । अन्ये तु जीवनं आयुरिति व्याचक्षते—**तपश्चेति** । तपो धर्मस्तद्रूपे मयि तपस्विनः

४ मधुसूदनीव्याख्या ।

तद्रूपे मयि सर्वा आपः प्रोता इत्यर्थः । एवं सर्वेषु पर्यायेषु व्याख्यातव्यम् । इयं विभूतिराध्यानायोपदिश्यत इति नातीवाभिनिवेष्टव्यम् । तथा प्रभा प्रकाशः शशिसूर्ययोरहमस्मि । प्रकाशसामान्यरूपे मयि शशिसूर्यौ प्रोतावित्यर्थः । तथा प्रणव ओंकारः सर्ववेदेष्वनुस्यूतोऽहं 'तद्यथा शङ्कुना सर्वाणि पर्णानि संतृण्णान्येवमोंकारेण सर्वा वाक्' इति श्रुतेः । संतृण्णानि ग्रथितानि । सर्वा वाक् सर्वो वेद इत्यर्थः । शब्दः पुण्यस्तन्मात्ररूपः खे आकाशेऽनुस्यूतोऽहम् । पौरुषं पुरुषत्वसामान्यं नृषु पुरुषेषु यदनुस्यूतं तदहम् । सामान्यरूपे मयि सर्वे विशेषाः प्रोताः श्रौतैर्दुन्दुभ्यादिदृष्टान्तैरिति सर्वत्र द्रष्टव्यम् ॥ ८ ॥ पुण्यः सुरभिरविकृतो गन्धः सर्वपृथिवीसामान्यरूपस्तन्मात्राख्यः पृथिव्यामनुस्यूतोऽहम् । चकारो रसादीनामपि पुण्यत्वसमुच्चयार्थः । शब्दस्पर्शरूपरसगन्धानां हि स्वभावत एव पुण्यत्वमविकृतत्वं प्राणिनामधर्मविशेषात्तु तेषामपुण्यत्वं ननु स्वभावत इति द्रष्टव्यम् ।

५ भाष्योत्कर्षदीपिका ।

गन्धः' इति गन्धस्य पुण्यत्वप्रदर्शनं रसादेरपि पुण्यत्वोपलक्षणार्थम् । रसः पुण्यो मधुरस्तस्मिन् रसरूपे मयि आपः प्रोताः । कौन्तेयेति संबोधयन् अस्मन्मातुलेये त्वयि कथं सर्वं प्रोतमित्यसंभावनां माकुर्विति ध्वनयति । तथा प्रभा प्रकाशस्तस्मिन्प्रकाशरूपे मयि शशिसूर्यौ प्रोतौ तदा सर्ववेदसारभूते प्रणवे ओंकाररूपे मयि सर्वे वेदाः प्रोताः । तथा आकाशानुस्यूते पुण्ये शब्दे शब्दतन्मात्ररूपे मयि आकाशः प्रोतस्तथा पौरुषं पुरुषस्य भावः पुंबुद्धिः पुरुषसारभूता तस्मिन्पौरुषरूपे मयि पुरुषाः प्रोताः ॥ ८ ॥ पृथ्वीसारभूते सुरभिगन्धे गन्धतन्मात्रभूते मयि पृथिवी प्रोता । रसादेः पुण्यत्वं स्वभावादेवापुण्यत्वं त्वविद्याधर्माद्यपेक्षं संसारिणां

६ श्रीधरीव्याख्या ।

शशिसूर्ययोः प्रभास्मि । चन्द्रेऽर्के च प्रकाशरूपया विभूत्या तदाश्रयत्वेन स्थितोऽहमित्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् । सर्वेषु वेदेषु वैखरीरूपेषु तन्मूलभूतः प्रणव ओंकारोऽस्मि । खे आकाशे शब्दतन्मात्ररूपोऽस्मि । नृषु पुरुषेषु पौरुषमुद्यमोऽस्मि । उद्यमे हि पुरुषास्तिष्ठन्ति ॥ ८ ॥ किंच—**पुण्य इति** । पुण्योऽविकृतो गन्धः । गन्धतन्मात्रं पृथिव्या आश्रयभूतमहमित्यर्थः । यद्वा विभूतिरूपेणाश्र-

७ अभिनवगुप्ताचार्यव्याख्या ।

वह्नितद्धृदयैर्ब्रह्मगुहागहनगामी योगिगणैः संवेद्योऽनाहताख्यः सकलश्रुति[मार्गा]ग्रामानुगामी तद्भगवतस्तत्त्वं पौरुषं येन तेजसा पुरुषोऽहमिति सार्वभौमं प्रतिपाद्यते ॥ ८ ॥ यो धरायां केवलधर्मतया गन्धगुणः स स्वभावपुण्यः । पूत्युत्कटत्वादीनि तु भूतान्तरसंबन्धात् ।

**बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम्।**
**बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥ १० ॥**
**बलं बलवतामस्मि कामरागविवर्जितम्।**
**धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥ ११ ॥**

१ श्रीमच्छांकरभाष्यम्।

तेजो दीप्तिश्चास्मि विभावसावग्नौ। तथा जीवनं सर्वभूतेषु। येन जीवन्ति सर्वाणि भूतानि तज्जीवनम्। तपश्चास्मि तपस्विषु तस्मिंस्तपसि मयि तपस्विनः प्रोताः ॥ ९ ॥ बीजमिति। बीजं प्ररोहकारणं मां विद्धि सर्वभूतानां हे पार्थ, सनातनं चिरंतनम्। किंच बुद्धिर्विवेकशक्तिरन्तःकरणस्य बुद्धिमतां विवेकशक्तिमतामस्मि। तेजः प्रागल्भ्यं तद्वतां तेजस्विनामहम् ॥ १० ॥ बलमिति। बलं सामर्थ्यमोजो

२ आनन्दगिरिव्याख्या।

प्रोतोऽग्निरित्याह—**तेज इति**। जीवनभूते च मयि सर्वाणि भूतानि प्रोतानीत्याह—**तथेति**। जीवनशब्दार्थमाह—**येनेति**। अन्नरसेनामृताख्येनेत्यर्थः। तपश्चास्मीत्यादेस्तात्पर्यार्थमाह—**तस्मिन्निति**। चित्तैकाग्र्यमनाशकादि वा तपस्तदात्मनीश्वरे प्रोतास्तपस्विनो विशेषणाभावे विशिष्टस्य वस्तुनोऽभावादित्यर्थः ॥ ९ ॥ ननु सर्वाणि भूतानि स्वकारणे प्रोतानि कथं तेषां त्वयि प्रोतत्वं तत्राह—**बीजमिति**। बीजान्तरापेक्षयानवस्थां वारयति—**सनातनमिति**। चैतन्यस्याभिव्यञ्जकं तत्त्वनिश्चयसामर्थ्यं बुद्धिस्तद्वतां या बुद्धिस्तद्भूते मयि सर्वे बुद्धिमन्तः प्रोता भवन्तीत्याह—**किंचेति**। प्रागल्भ्यवतां यत्प्रागल्भ्यं तद्भूते मयि तद्वन्तः प्रोता इत्याह—**तेज इति**। तद्धि प्रागल्भ्यं यत्पराभिभवसामर्थ्यं परैश्चाप्रधृष्यत्वम् ॥ १० ॥ यच्च बलवतां बलं तद्भूते मयि तेषां प्रोतत्वमित्याह—**बलमिति**। काम-

३ नीलकण्ठव्याख्या (चतुर्धरी)।

प्रोताः ॥ ९ ॥ बीजं कारणम्। सर्वभूतानां पिण्डब्रह्माण्डात्मकानां बीजे मयि पिण्डादिकं प्रोतम्। कनके कुण्डलादिवत्। सनातनं नित्यं बीजान्तरादनुत्पन्नम्। बुद्धिरूपे मयि बुद्धिमन्तः प्रोताः। तेजः प्रागल्भ्यं तद्रूपे मयि प्रगल्भाः प्रोताः ॥ १० ॥ बलरूपे मयि बलवन्तः प्रोताः। कामरागविवर्जितं कामस्तृष्णा रागो रञ्जना। तौ हि आविद्यकौ।

४ मधुसूदनीव्याख्या।

तथा विभावसावग्नौ यत्तेजः सर्वदहनप्रकाशनसामर्थ्यरूपमुष्णस्पर्शसहितं सितभास्वरं रूपं पुण्यं तदहमस्मि। चकाराद्यो वायौ पुण्य उष्णस्पर्शातुराणामाप्यायकः शीतस्पर्शः सोऽप्यहमिति द्रष्टव्यम्। सर्वभूतेषु सर्वेषु प्राणिषु जीवनं प्राणधारणमायुरहमस्मि। तद्रूपे मयि सर्वे प्राणिनः प्रोता इत्यर्थः। तपस्विषु नित्यं तपोयुक्तेषु वानप्रस्थादिषु यत्तपः शीतोष्णक्षुत्पिपासादिद्वन्द्वसहनसामर्थ्यरूपं तदहमस्मि। तद्रूपे मयि तपस्विनः प्रोताः विशेषणाभावे विशिष्टाभावात्। तपश्चेति चकारेण चित्तैकाग्र्यमान्तरं जिह्वोपस्थादिनिग्रहलक्षणं बाह्यं च सर्वं तपः समुच्चीयते ॥ ९ ॥ सर्वाणि भूतानि स्वस्वबीजेषु प्रोतानि नतु त्वयीति चेन्नेत्याह—यत्सर्वभूतानां स्थावरजङ्गमानामेकं बीजं कारणं सनातनं नित्यं बीजान्तरानपेक्षं नतु प्रतिव्यक्तिभिन्नमनित्यं वा तदव्याकृताख्यं सर्वबीजं मामेव विद्धि नतु मद्भिन्नं हे पार्थ, अतो युक्तमेकस्मिन्नेव मयि सर्वबीजे प्रोतत्वं सर्वेषामित्यर्थः। किंच बुद्धिस्तत्त्वातत्त्वविवेकसामर्थ्यं तादृशबुद्धिमतामहमस्मि। बुद्धिरूपे मयि बुद्धिमन्तः प्रोताः। विशेषणाभावे विशिष्टाभावस्योक्तत्वात्। तथा तेजः प्रागल्भ्यं पराभिभवसामर्थ्यं परैश्चानभिभाव्यत्वं तेजस्विनां तथाविधप्रागल्भ्ययुक्तानां यत्तदहमस्मि। तेजोरूपे मयि

५ भाष्योत्कर्षदीपिका।

भूतविशेषनिमित्तजं भवति। अग्निसारभूते तेजसि तेजोरूपे मयि विभावसुरग्निः प्रोतः। तथा जीवने सर्वभूतसारभूते आयूरूपे अन्नरूपे वा तस्मिंस्तद्रूपे मयि सर्वे भूताः प्रोताः। तपस्विसारभूते तपोरूपे मयि तपस्विनः प्रोताः ॥ ९ ॥ ननु सर्वाणि भूतानि स्वस्वकारणे प्रोतानि कथं तेषां त्वयि प्रोतत्वमित्याशङ्क्याह। बीजं जन्मादिकारणं सर्वभूतानां मां विद्धि जानीहि। यथा सर्वेषां पाण्डवानां युष्माकं साक्षान्माद्या मन्त्रदानेन परम्परया च पृथैव बीजं तथेति द्योतयन्नाह—हे पार्थेति। बीजान्तरापेक्षयानवस्थां वारयति। सनातनं चिरन्तनम्। बुद्धिरन्तःकरणस्य विवेकशक्तिर्ब्रह्म सत्यं जगन्मिथ्येति विवेचनसामर्थ्यं तद्रूपे मयि बुद्धिमन्तः प्रोताः। तथा तेजसि

६ श्रीधरीव्याख्या।

यत्वस्य विवक्षितत्वात्सुरभिगन्धस्यैवोत्कृष्टतया विभूतित्वात्पुण्यो गन्ध इत्युक्तम्। तथा विभावसावग्नौ यत्तेजः सहजा दीप्तिस्तदहम्। सर्वभूतेषु जीवनं प्राणधारणमायुरहमित्यर्थः। तपस्विषु वानप्रस्थादिषु द्वन्द्वसहनरूपं तपोऽस्मि ॥ ९ ॥ किंच—**बीजमिति**। सर्वेषां चराचराणां भूतानां बीजं सजातीयकार्योत्पादनसामर्थ्यं सनातनं नित्यमुत्तरोत्तरसर्वकार्येष्वनुस्यूतं तदेव बीजं मद्विभूतिं विद्धि नतु

७ अभिनवगुप्ताचार्यव्याख्या।

उक्तं च 'इदं भूमिगुणाधिक्याद्दुर्गन्ध्यग्निगुणोद्‌भवात्। जडमम्बुगुणौदार्यात्' इत्यादि ॥ ९ ॥ बीजं सूक्ष्ममादिकारणम् ॥ १० ॥ कामराग-

**ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ।**
**मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥ १२ ॥**

१ श्रीमच्छांकरभाष्यम् ।

बलवतामहम् । तच्च बलं कामरागविवर्जितं कामश्च रागश्च कामरागौ कामस्तृष्णाऽसंनिकृष्टेषु विषयेषु, रागो रञ्जना प्राप्तेषु विषयेषु ताभ्यां कामरागाभ्यां विवर्जितं देहादिधारणमात्रार्थं बलमहमस्मि न तु यत्संसारिणां तृष्णारागकारणम् । किंच धर्माविरुद्धो धर्मेण शास्त्रार्थेनाविरुद्धो यः प्राणिषु भूतेषु कामो यथा देहधारणमात्राद्यर्थोऽशनपानादिविषयः कामोऽस्मि हे भरतर्षभ ॥ ११ ॥ किंच—ये चैवेति । ये चैव सात्त्विकाः सत्त्वनिर्वृत्ता भावाः पदार्था राजसा रजोनिर्वृत्तास्तामसा-

२ आनन्दगिरिव्याख्या ।

क्रोधादिपूर्वकस्यापि बलस्यानुमतिं वारयति—**तच्चेति** । कामरागयोरेकार्थत्वमाशङ्क्यार्थभेदमावेदयति—**कामस्तृष्णेत्यादिना** । विशेषणसामर्थ्यसिद्धं व्यावर्त्यं दर्शयति—**नत्विति** । शास्त्रार्थाविरुद्धकामभूते मयि तथाविधकामवतां भूतानां प्रोतत्वं विवक्षित्वाह—**किंचेति** । धर्माविरुद्धं काममुदाहरति—**यथेति** ॥ ११ ॥ चिदानन्दयोरभिव्यञ्जकानां भावानामीश्वरात्मत्वाभिधानादन्येषामतदात्मत्वप्राप्तावुक्तं—**किंचेति** । प्राणिनां त्रैविध्ये हेतुं दर्शयन्वाक्यार्थ-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

अतो निरविद्यस्य बलं तद्वर्जितम् । एवं धर्माविरुद्धकामरूपे मयि ईदृशाः कामवन्तः प्रोताः ॥ ११ ॥ सात्त्विकाः धर्मज्ञानवैराग्यैश्वर्यादयः, राजसा लोभप्रवृत्त्यादयः, तामसा निद्रालस्यादयः, तान्सर्वान्मत्त एव रसतन्मात्रादिरूपात्सूत्रात्मनो निर्गता इति विद्धि । नन्वेवं तव सर्वजगदात्मनो विकारित्वापत्त्या कौटस्थ्यहानिरित्याशङ्क्याह—**नत्वहं तेषु ते मयीति** । येष्वबादयः प्रोतास्तेषु सूत्रावयवभूतेषु रसादिष्वनृतजडरूपेष्वबाधितात्मचिन्मात्ररूपो घटशरावोदञ्चनादाविव मृत् नास्मि । अनृतस्यास्य सत्तास्फुरणे एव स्वकीये प्रयच्छामि नत्वनृतात्मा भवामीत्यर्थः । ते तु मय्ये-

४ मधुसूदनीव्याख्या ।

तेजस्विनः प्रोता इत्यर्थः ॥ १० ॥ अप्राप्तो विषयः प्राप्तिकारणाभावेऽपि प्राप्यतामित्याकारश्चित्तवृत्तिविशेषः कामः, प्राप्तो विषयः क्षयकारणे सत्यपि न क्षीयतामित्येवमाकारश्चित्तवृत्तिविशेषो रञ्जनात्मा रागस्ताभ्यां विशेषेण वर्जितं सर्वथा तदाकाररजस्तमोविरहितं यत्स्वधर्मानुष्ठानाय देहेन्द्रियादिधारणसामर्थ्यं सात्त्विकं बलं बलवतां तादृशसात्त्विकबलयुक्तानां संसारपराङ्मुखानां तदहमस्मि । तद्रूपे मयि बलवन्तः प्रोता इत्यर्थः । चशब्दस्तुशब्दार्थे भिन्नक्रमः । कामरागविवर्जितमेव बलं मद्रूपत्वेन ध्येयं नतु संसारिणां कामरागकारणं बलमित्यर्थः । क्रोधार्थो वा रागशब्दो व्याख्येयः । धर्मो धर्मशास्त्रं तेनाविरुद्धोऽप्रतिषिद्धो धर्मानुकूलो वा यो भूतेषु प्राणिषु कामः शास्त्रानुमतजायापुत्रवित्तादिविषयोऽभिलाषः सोऽहमस्मि । हे भरतर्षभ, शास्त्राविरुद्धकामभूते मयि तथाविधकामयुक्तानां भूतानां प्रोतत्वमित्यर्थः ॥ ११ ॥ किमेवं परिगणनेन—ये चान्येऽपि भावाश्चित्तपरिणामाः सात्त्विकाः शमदमादयः, ये च राजसा हर्षदर्पादयः, ये च तामसाः शोकमोहादयः प्राणिनामविद्याकर्मादिवशाज्जायन्ते तान्मत्त एव जाय-

५ भाष्योत्कर्षदीपिका ।

प्रागल्भ्यभूते मयि तेजस्विनः प्रोताः ॥ १० ॥ बलं सामर्थ्यमोजस्तस्मिन्कामरागविवर्जिते कामोऽप्राप्तेषु विषयेषु प्राप्त्यभिलाषः, रागः प्राप्तेषु तेषु रञ्जनात्मकः प्रेम्णोऽतिशयः । क्रोधार्थो वा रागशब्दो व्याख्येयः । अस्मिन्पक्षे लक्षणादोष इति बोध्यम् । तद्रहिते देहधारणमात्रप्रयोजने बलभूते मयि बलवन्तः प्रोताः । तथा धर्मेण शास्त्रविहितेनाविरुद्धे देहधारणार्थेऽशनपानादिविषये कामे तद्रूपे मयि कामवतां भूतानां प्रोतत्वम् । भरतर्षभेति संबोधयन् भरतैः क्षत्रियवरैः सेवितं युद्धात्मकधर्मस्य साधकं कामरागविवर्जितं क्षत्रधर्मेण युद्धेन देहधारणमात्रप्रयोजनकं मद्विभूत्यात्मकं बलं स्वधर्मेण शत्रून्विजित्य धर्माविरुद्धं अन्नपानादिविषयं कामं च मद्विभूतिरूपं भरतानां मध्ये श्रेष्ठस्त्वं त्यक्तुं नार्हसीति सूचयति ॥११॥ किंच ये सात्त्विकाः सत्त्वोद्भूताः भावाः पदार्थाः, राजसाः

६ श्रीधरीव्याख्या ।

प्रतिव्यक्ति विनश्यत् । तथा बुद्धिमतां बुद्धिः प्रज्ञाहमस्मि । तेजस्विनां तेजः प्रागल्भ्यमहम् ॥ १० ॥ किंच—**बलमिति** । कामोऽप्राप्ते वस्तुन्यभिलाषो राजसः, रागः पुनरभिलषितेऽर्थे प्राप्तेऽपि पुनरधिकेऽर्थे चित्तरञ्जनात्मकस्तृष्णापरपर्यायस्तामसः, ताभ्यां विवर्जितं बलवतां बलमस्मि । सात्त्विकं स्वधर्मानुष्ठानसामर्थ्यमहमित्यर्थः । स्वधर्मेणाविरुद्धः स्वदारेषु पुत्रोत्पत्तिमात्रोपयोगी कामोऽहम् ॥ ११ ॥ किंच—**ये चेति** । ये चान्येऽपि सात्त्विका भावाः शमदमादयः राजसाश्च द्वेषदर्पादयः तामसाश्च शोकमोहादयः प्राणिनां स्वकर्मवशा-

७ अभिनवगुप्ताचार्यव्याख्या ।

विवर्जितं बलं सकलवस्तुधारणसमर्थमूर्जोरूपम् । कामं इच्छा संविन्मात्ररूपा । यस्या घटपटादिभिर्धर्मरूपैर्नास्ति विशेषः । इच्छा हि सर्वत्र भगवच्छक्तितयानुयायिनी न कश्चिद्विरुध्यते धर्मैस्त्वागन्तुकैर्घटपटादिभिर्भिद्यत इति तदुपासकतया शुद्धसंविद्रूपस्वभावत्वं ज्ञानिनः ।

**त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत्।**
**मोहितं नाभिजानाति मामेभ्यः परमव्ययम्॥ १३॥**

१ श्रीमच्छांकरभाष्यम्।

स्तमोनिर्वृत्ताश्च ये केचित्प्राणिनां स्वकर्मवशाज्जायन्ते भावास्तान्मत्त एव जायमानानित्येवं विद्धि सर्वान्समस्तानेव। यद्यपि ते मत्तो जायन्ते तथापि न त्वहं तेषु तदधीनस्तद्वशो यथा संसारिणस्ते पुनर्मयि मद्वशा मदधीनाः॥ १२॥ एवंभूतमपि परमेश्वरं नित्यशुद्धबुद्धमुक्तस्वभावं सर्वभूतात्मानं निर्गुणं संसारदोषबीजप्रदाहकारणं मां नाभिजानाति जगदित्यनुक्रोशं दर्शयति भगवान्। तच्च किंनिमित्तं जगतोऽज्ञानमित्युच्यते—त्रिभिरिति। त्रिभिर्गुणमयैर्गुणविकारै रागद्वेषमोहादिप्रकारैर्भावैः

२ आनन्दगिरिव्याख्या।

माह—ये केचिदिति। तर्हि पितुरिव पुत्राधीनत्वं त्वत्तो जायमानात्तदधीनत्वं तवापि स्यादिति विक्रियावत्त्वदूष्यत्वप्रसक्तिरित्याशङ्क्याह—यद्यपीति। मम परमार्थत्वात्तेषां कल्पितत्वान्न तद्गुणदोषौ मयि स्यातामित्यर्थः। तेषामपि तद्वदेव स्वतन्त्रतासंभवात्किमिति कल्पितत्वमित्याशङ्क्याह—ते पुनरिति। त्रिविधानां भावानां न स्वातन्त्र्यमीश्वरकार्यत्वेन तदधीनत्वात्तथा च कल्पितस्याधिष्ठानसत्ताप्रतीतिभ्यामेव तद्वत्त्वात्तन्मात्रत्वसिद्धिरित्यर्थः॥ १२॥ सतीश्वरस्य स्वातन्त्र्ये नित्यशुद्धत्वादौ च कुतो जगतस्तदात्मकस्य संसारित्वमित्याशङ्क्य तदज्ञानादित्याह—एवंभूतमपीति। यद्यप्रपञ्चोऽविक्रियश्च त्वं कस्मात्त्वामात्मभूतं स्वयंप्रकाशं सर्वो जनस्तथा न जानातीति मत्वा शङ्कते—

३ नीलकण्ठव्याख्या (चतुर्धरी)।

वाध्यस्ता मदनन्याः, यथा रज्ज्वामध्यस्ताः सर्पादयो रज्ज्वनन्याः। 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इतिन्यायात्। अनन्यत्वं व्यतिरेकेणाभावः। नखल्वनन्यत्वमित्यभेदं ब्रूमः किंतु भेदं निषेधामः। कुतः आरम्भणशब्दात् 'वाचारम्भणं विकारो नामधेयम्' इति विकारस्य वागालम्बनत्वेन स्वप्नमायेन्द्रजालिकविषयसाम्यश्रुतेः। नह्यात्मनो विचित्रप्रपञ्चात्मत्वे ते मयीत्यंशाविरोधेऽपि नत्वहं तेष्वित्यंशे विरोधपरिहारो युज्यते। कार्यस्य कारणात्मकत्वावश्यंभावात्। तस्माद्विवर्तवादाश्रयेणैव ब्रह्मणो जगदुपादानत्वकूटस्थत्वे निर्वहत इति साधूक्तं नत्वहं तेषु ते मयीति॥ १२॥ कथं तर्हि स्थूलसूक्ष्मप्रपञ्चबाधेन जना आत्मानं नावगच्छन्तीत्याशङ्क्याह—त्रिभिरिति। एभिः पूर्वोक्तैस्त्रिभिस्त्रि-

४ मधुसूदनीव्याख्या।

मानानिति 'अहं कृत्स्नस्य जगतः प्रभव' इत्याद्युक्तप्रकारेण विद्धि समस्तानेव। अथवा सात्त्विका राजसास्तामसाश्च भावाः सर्वेऽपि जडवर्गो व्याख्येयाः विशेषहेत्वभावात्। एवकारश्च समस्तावधारणार्थः। एवमपि न त्वहं तेषु, मत्तो जातत्वेऽपि तद्वशस्तद्विकाररूषितो रज्जुखण्ड इव कल्पितसर्पविकाररूषितोऽहं न भवामि संसारीव। ते तु भावा मयि रज्ज्वामिव सर्पादयः कल्पिता मदधीनसत्तास्फूर्तिका मदधीना इत्यर्थः॥ १२॥ तव परमेश्वरस्य स्वातन्त्र्ये नित्यशुद्धबुद्धमुक्तस्वभावत्वे च सति कुतो जगतस्त्वदात्मकस्य संसारित्वं, एवंविधमत्स्वरूपापरिज्ञानादिति चेत् तदेव कुत इत्यत आह—एभिः प्रागुक्तैस्त्रिभिस्त्रिविधैर्गुणमयैः सत्त्वरजस्तमोगुणविकारैर्भावैः सर्वैरपि भवनधर्मभिः सर्वमिदं जगत्प्राणिजातं मोहितं विवेकायोग्यत्वमापादितं सदेभ्यो गुणमयेभ्यो

५ भाष्योत्कर्षदीपिका।

रजउद्भूताः तामसास्तमउद्भूताश्च ये केचित्प्राणिनां स्वकर्मवशाज्जायन्ते तान्सर्वान्मत्तएव जातानिति विद्धि जानीहि। तर्हि संसारिणामिव तवापि तदधीनत्वं स्यात्तथाच त्वय्यपि विक्रियावत्त्वाद्दूष्यत्वप्रसक्तिरित्याशङ्क्याह—नत्वहं तेषु। यद्यपि मत्तस्ते जायन्ते तथाप्यहं संसारिण इव तदधीनो न भवामि। ननु तेऽपि किं स्वतन्त्राः नेत्याह—ते मयि मद्वशाः। मयि कल्पितत्वान्मदधीनसत्तास्फूर्तिका इत्यर्थः। तथाचाधिष्ठानस्य मम कल्पितगुणदोषासंस्पर्शित्वं कल्पितस्य च मदधीनसत्तास्फूर्तिकत्वमिति भावः॥ १२॥ एवंभूतमपि मामीश्वरं नित्यशुद्धबुद्धमुक्तस्वभावं सर्वात्मानं निर्गुणं संसारमूलोच्छेदाय जगन्नाभिजानातीत्याक्रोशं दर्शयन्स्वाज्ञाने निमित्तमाह—त्रिभिरिति। त्रिभिस्त्रिविधैः गुणमयैर्गुणविकारैः भावैः पदार्थै रागद्वेषमोहादिभिः सर्वमिदं जगत् चराचरात्मकं मोहितं विवेका-

६ श्रीधरीव्याख्या।

ज्जायन्ते तान्सर्वान्मत्त एव जातानिति विद्धि। मदीयप्रकृतिगुणत्रयकार्यत्वात्। एवमपि तेष्वहं न वर्ते। जीववत्तदधीनोऽहं न भवामीत्यर्थः। ते तु मदधीनाः सन्तो मयि वर्तन्त इत्यर्थः॥ १२॥ एवंभूतं त्वां परमेश्वरमयं जनः किमिति न जानातीत्यत आह—त्रिभिरिति।

७ अभिनवगुप्ताचार्यव्याख्या।

उक्तंच शिवोपनिषदि 'इच्छायामथवा ज्ञाने जाते चित्तं निवेशयेत्' इति। जातएव न वाह्यप्रसूत इत्यर्थः। एवं व्याख्यानं त्यक्त्वा ये परस्परानुपघातकं त्रिवर्गं सेवन्त इत्याशयेन व्याचक्षते ते संप्रदायक्रममजानाना भगवद्रहस्यं च व्याचक्षाणा नमस्कार्या एव। सत्त्वादीनि मन्मयानि नत्वहं तन्मयः। अतएव च भगवन्मया सर्वं भगवद्भावेन संवेद्यते ननु नानाविषयपदार्थविज्ञाननिष्ठो भगवत्तत्त्वं प्रतिपद्यत इति सकलमान(सा)वावर्जक एष क्रमः। अनेनैव चाशयेन वक्ष्यते 'वासुदेवः सर्वमिति' ज्ञानेन यो बहुजन्मोपभोग-

**दैवी ह्येषा गुणमयी मम माया दुरत्यया।**
**मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते॥ १४॥**

१ श्रीमच्छांकरभाष्यम्।

**पदार्थैरेभिर्यथोक्तैः सर्वमिदं प्राणिजातं जगन्मोहितमविवेकतामापादितं सन्नाभिजानाति मामेभ्यो यथोक्तेभ्यो गुणेभ्यः परं व्यतिरिक्तं विलक्षणम्। चाव्ययं व्ययरहितम्। जन्मादिसर्वभावविकारवर्जितमित्यर्थः॥ १३॥ कथं पुनर्दैवीमेतां त्रिगुणात्मिकां वैष्णवीं मायामतिक्रामन्तीत्युच्यते—दैवीति। दैवी**

२ आनन्दगिरिव्याख्या।

**तच्चेति।** **श्लोकेनोत्तरमाह—उच्यत इति।** एभ्यः परमित्यप्रपञ्चकत्वमुच्यते। अव्ययमिति सर्वविक्रियाराहित्यम्॥ १३॥ यथोक्तानादिसिद्धमायापारवश्यपरिवर्जनायोगाज्जगतो न कदाचिदपि तत्त्वबोधसमुदयसंभावनेत्याशङ्कते—**कथं पुनरिति।** भगवदेकशरणतया तत्त्वज्ञानद्वारेण मायातिक्रमः संभवतीति परिहरति—**उच्यत इति।** कथं दुरत्यय-

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

विधैर्भावैः प्रकाशप्रवृत्तिनियमाद्यैर्गुणमयैः सत्त्वरजस्तमोगुणविकारैः इदं चराचरं प्राणिजातं जगच्छब्दवाच्यं मोहितं सत् एभ्यो गुणेभ्यः परं मां न जानाति। यथा रज्ज्वां सर्पभ्रमेण व्याकुलः सर्पात्परां रज्जुं न जानाति तद्वत्। परत्वे हेतुः अव्ययम्। एते भावाः परिणामित्वाद्व्ययवन्तः, अहं तु तद्विपरीतः साक्षीत्यव्ययः॥ १३॥ देवस्य जीवरूपेण लीलया क्रीडतो मम संबन्धिनीयं दैवी हि प्रसिद्धा पिण्डब्रह्माण्डरूपेण वितता एषा मम चिन्मात्रस्य माया मामहं न जानामीति साक्षिप्रत्यक्षत्वेनापलापानर्हा अनृतस्य प्रपञ्चस्येन्द्रजालादेरिव प्रकाशिका गुणमयी सत्त्वरजस्तमो-

४ मधुसूदनीव्याख्या।

भावेभ्यः परं एषां कल्पनाधिष्ठानमत्यन्तविलक्षणमव्ययं सर्वविक्रियाशून्यमप्रपञ्चमानन्दघनमात्मप्रकाशमव्यवहितमपि मां नाभिजानाति। ततश्च स्वरूपापरिचयात्संसरतीत्यहो दौर्भाग्यमविवेकिजनस्येत्यनुक्रोशं दर्शयति भगवान्॥ १३॥ ननु यथोक्तानादिसिद्धमायागुणत्रयबद्धस्य जगतः स्वातन्त्र्याभावेन तत्परिवर्जनासामर्थ्याच्च कदाचिदपि मायातिक्रमः स्याद्वस्तुविवेकासामर्थ्यहेतोः सदातनत्वादित्याशङ्क्य भगवदेकशरणतया तत्त्वज्ञानद्वारेण मायातिक्रमः संभवतीत्याह—दैवी 'एको देवः सर्वभूतेषु गूढः' इत्यादिश्रुतिप्रतिपादिते स्वतोद्योतनवति देवे स्वप्रकाशचैतन्यानन्दे निर्विभागे तदाश्रयतया तद्विषयतया च कल्पिता 'आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला' इत्युक्तेः। एषा साक्षिप्रत्यक्षत्वेनापलापानर्हा। हिशब्दाद्भ्रमोपादानत्वादर्थापत्तिसिद्धा च। गुणमयी सत्त्वरजस्तमोगुणत्रयात्मिका। त्रिगुणरज्जुरिवातिदृढत्वेन बन्धनहेतुः, मम मायाविनः परमेश्वरस्य सर्वजगत्कारणस्य सर्वज्ञस्य सर्वशक्तेः

५ भाष्योत्कर्षदीपिका।

च्छादकमोहं प्रापितं सन्मामेभ्यो गुणतद्विकारेभ्यः परमतिरिक्तमत एवाव्ययं व्ययरहितम्। जन्मादिसर्वभावविकारविवर्जितमित्यर्थः। नाभिजानाति। स्वाभिन्नत्वेन न साक्षात्करोतीत्यर्थः॥१३॥ तर्ह्यनादिसिद्धां त्रिगुणात्मिकां दैवीं मायां जीवमोहिनीं केनोपायेनातिक्रामन्तीत्यपेक्षायामाह—**दैवी हीति।** देवस्य ममेश्वरस्य स्वभूता त्रिगुणमयी त्रिगुणात्मिका माया प्रकृतिः 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्'। सा प्रकृतिर्मायाविद्यारूपेण द्विधा 'माया चाविद्या च स्वयमेव भवति' इति श्रुतेः। तदुक्तं 'तमोरजःसत्त्वगुणा प्रकृतिर्द्विविधा मता। सत्त्वशुद्ध्यविशुद्धिभ्यां मायाविद्ये च ते मते॥ मायाबिम्बो वशीकृत्य तां स्यात्सर्वज्ञ ईश्वरः। अविद्यावशगस्त्वन्यस्तद्वैचित्र्यादनेकधा॥' इति। तथाच माया प्रकृतिरविद्या मायामयी ईश्वरमधिष्ठानत्वेनाश्रित्य जीवान्मोहयति। तथाच शारीरकं भाष्यं 'अविद्यात्मिका हि बीजशक्तिरव्यक्तशब्दनिर्देश्या परमेश्वराश्रया मायामयी महासुषुप्तिर्यस्यां स्वरूपबोधरहिताः शेरते संसारिणो जीवास्तदव्यक्तमिति मोहदा चाविद्यारूपेण संसारबीजभूतेन। सा चाविद्या जीवाश्रया परमात्मविषया वेदान्तवेद्यं वस्तु न जानामीत्यत्र तथैवानुभवात्। नचाविद्यायां सत्यां जीवपरमात्मविभागः। सति चैतस्मिन्जीवाश्रया परमात्मविषया विद्येतीतरेतराश्रय इति वाच्यम्। जीवाविद्ययोर्बीजाङ्कुरवदनादित्वात्। नन्वेतदृष्टान्तेन जीवानित्यत्वमिति चेन्न। उत्तरोत्तरजीवाभिव्यक्तीनां पूर्वपूर्वभ्रम-

६ श्रीधरीव्याख्या।

त्रिभिस्त्रिविधैरेभिः पूर्वोक्तैः गुणमयैः कामलोभादिभिर्गुणविकारैः भावैः स्वभावैर्मोहितमिदं जगत् अतो मां नाभिजानाति। कथंभूतम्। एभ्यो भावेभ्यः परं एभिरसंस्पृष्टम्। एतेषां नियन्तारमत एवाव्ययम्। निर्विकारमित्यर्थः॥ १३॥ के तर्हि त्वां जानन्तीत्यत आह—**दैवी हीति।** दैवी अलौकिकी अत्यद्भुतेत्यर्थः। गुणमयी सत्त्वादिगुणविकारात्मिका मम परमेश्वरस्य शक्तिर्माया दुरत्यया दुस्तरा। हि

७ अभिनवगुप्ताचार्यव्याख्या।

जनितकर्मसमतासमनन्तरसमुत्पन्नपरशक्तिपातानुगृहीतान्तःकरणोऽसौ प्रतिपद्यते भगवत्तत्त्वम्। ननु सर्वं वासुदेव इति बुद्ध्या स महात्मा स च दुर्लभ इति। एवं हि बुध्यमानं प्रत्युत सत्त्वादिभिर्गुणैर्मोहितमिदं जगत् गुणातीतं वासुदेवतत्त्वं नैवोपलभते॥ ११॥ ॥ १२॥ १३॥ कथं खलु सत्त्वादिमात्रस्थिता भगवतस्तत्त्वं न विदुरित्याह—दैवीति। देवः क्रीडाकरस्तत्र भवा दैवी क्रीडा अमेय-

१ श्रीमच्छांकरभाष्यम्।

**देवस्य ममेश्वरस्य विष्णोः स्वभूता हि यस्मादेषा यथोक्ता गुणमयी मम माया दुरत्यया दुःखेनात्ययो-**

२ आनन्दगिरिव्याख्या।

त्वेन तदत्ययः स्यादिति तत्राह—**मामेवेति**। प्रधानस्येव स्वातन्त्र्यं मायाया व्युदस्यति—**देवस्येति**। [अ] स्वातन्त्र्ये मायात्वानुपपत्तिं हिशब्दद्योतितां हेतूकरोति—**यस्मादिति**। अनुभवसिद्धा सा नाकस्मादपलापमर्हतीत्याह—**एषेति**। जगतस्तत्त्वप्रतिपत्तिप्रतिबन्धभूता गुणाः सत्त्वादयः। ममेति प्रागुक्तमेव मायायाः संबन्धमनूद्य विधित्सितं

३ नीलकण्ठव्याख्या (चतुर्धरी)।

गुणमयी दुरत्यया दुरतिक्रमा। ये मामेव सर्वभूतस्थं भगवन्तं वासुदेवं प्रपद्यन्ते विषयीकुर्वन्ति त एवैतां मायां तरन्ति। अधिष्ठानज्ञानेनैव समूलस्य भ्रमस्योच्छेदो भवति नतु ज्ञानान्तरेण वा वृत्तिनिरोधेन वेत्यर्थः। अयमर्थः—जीवेश्वरविभागशून्ये शुद्धचिन्मात्रे कल्पितो मायादर्पणश्रितप्रतिबिम्बरूपं जीवं वशीकृत्य बिम्बचैतन्यमनुरुध्य प्रचलति।

४ मधुसूदनीव्याख्या।

स्वभूता स्वाधीनत्वेन जगत्सृष्ट्यादिनिर्वाहिका, माया तत्त्वप्रतिभासप्रतिबन्धेनातत्त्वप्रतिभासहेतुरावरणविक्षेपशक्तिद्वयवत्यविद्या सर्वप्रपञ्चप्रकृतिः। 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इति श्रुतेः। अत्रैवं प्रक्रिया—जीवेश्वरजगद्विभागशून्ये शुद्धे चैतन्येऽध्यस्तानादिरविद्या सत्त्वप्राधान्येन स्वच्छदर्पण इव मुखाभासं चिदाभासमागृह्णाति। ततश्च बिम्बस्थानीयः परमेश्वर उपाधिदोषानास्कन्दितः प्रतिबिम्बस्थानीयश्च जीव उपाधिदोषास्कन्दितः। ईश्वराच्च जीवभोगायाकाशादिक्रमेण शरीरेन्द्रियसंघातस्तद्भोग्यश्च कृत्स्नः प्रपञ्चो जायत इति कल्पना भवति। बिम्बप्रतिबिम्बमुखानुगतमुखवच्चेशजीवानुगतं मायोपाधि चैतन्यं साक्षीति कल्प्यते। तेनैव च स्वाध्यस्ता माया तत्कार्यं च कृत्स्नं प्रकाश्यते। अतः साक्ष्यभिप्रायेण दैवीति बिम्बेश्वरा-

५ भाष्योत्कर्षदीपिका।

निमित्तत्वाश्रयणात्। नन्वविद्याया जीवाश्रितत्वे स्वस्य च तदाश्रितत्वे आत्माश्रय इति चेन्न। अनादित्वेनोत्पत्त्यभावात्। जीवस्य स्वतःप्रतीत्या तद्बलादविद्याया अपि प्रतीतिसंभवात्। नन्वेवमपि स्वस्कन्धारूढारोहणवत्स्वाश्रिताश्रितत्वं विरुद्धमितिचेन्न। जीवाविद्ययोरमूर्तत्वेन कुण्डबदरवदधरोत्तरीभावायोग्यत्वेनावच्छेद्यावच्छेदकत्वाश्रयणात्। अविद्यावच्छेदकोपाधिकं जीवत्वमिति जीवो विद्ययावच्छिद्यते। सा च चैतन्याश्रिता वृक्षाश्रितः श्येनसंयोगः शाखात्वेनेव जीवत्वेनावच्छिद्यते। नन्विदमपीतरेतराश्रयग्रस्तमिति चेन्न। एवंविधस्थलेऽन्योन्याश्रयस्यादोषात्। प्रमेयत्वावगाहि प्रमाणं निरूपकप्रमेयावच्छेद्यं प्रमेयं च स्वविशेषणीभूतप्रमाणावच्छेद्यमित्येवमादिष्ववच्छेद्यावच्छेदकत्वस्यान्योन्याश्रयतन्त्रस्य दृष्टत्वात्। जीवाविद्ययोरधिष्ठानं तु ब्रह्म तस्यैव सर्वप्रपञ्चविवर्ताधिष्ठानत्वात्। तदुक्तम्—'अधिष्ठानं विवर्तानामाश्रयो ब्रह्मशुक्तिवत्। जीवाविद्यादिकानां स्यादिति सर्वमनाकुलम्॥' इति। अतएव भगवताप्युक्तं 'दैवी ह्येषा गुणमयी मम माये'ति। शुक्तिरेव यथा रजतरूपेणावभासते तथा पर एवात्मा अनाद्यविद्यावच्छेदलब्धजीवभावभेदेनावभासते। सएव च देहेन्द्रियादिभिरवच्छिद्यमानो बालैः शारीर इत्युपचर्यते। तादृशां च जीवानामविद्या नतु सर्वोपाधिविहीनस्य परमात्मनः। नन्वस्वतन्त्रोऽन्येन कारागृहे प्रवेश्यते। परमात्मा तु सर्वज्ञः सर्वशक्तिश्च कस्मादकस्मात्संसारी संपद्यत इतिचेन्न। जीवस्यानादित्वेन शङ्कानवसरात्। तथाचाविद्यात्मनो जीवस्यैवाविद्याकल्पितसुखादिसंभोग उपपद्यते नतु परमात्मनः। शुद्धबुद्धमुक्तस्वभावस्य निर्मृष्टनिखिलाविद्यातद्वासनस्येति हि यस्मादेषानुभवसिद्धा अकस्मादपलापानर्हा गुणमयी सत्त्वरजस्तमोमयी। प्रधानस्येव मायायाः स्वातन्त्र्यनिरासार्थं दैवीत्युक्तम्। देवस्येयं स्वभूता दैवी। कस्य देवस्येयं च केत्यपेक्षायां मम माया इत्युक्तम्। दुरत्यया दुःखेनात्ययोऽतिक्रमणं यस्याः सा। अतिक्रमणे तर्हि क उपाय इत्यपेक्षायामाह—**मामिति**। मामेव स्वात्मभूतम्। एवकारेण मायाया व्यावृत्तिर्विवक्ष्यते। ये प्रपद्यन्ते सर्वात्मना प्रपन्ना भवन्ति ते मत्प्रसादाल्लब्धबुद्धियोगा मायामेतां दुरत्ययां सर्वभूतमोहिनीं तरन्ति अतिक्रामन्ति। संसारबन्धनान्मुच्यन्त इत्यर्थः। अत्रेदमवधेयम्—अनादिरनिर्वाच्या भूतप्रकृतिश्चिन्मात्रसंबन्धिनी माया। तस्यां चित्प्रतिबिम्ब ईश्वरः। तस्या एवावरणविक्षेपशक्तिमदविद्याभिधानेषु परिच्छिन्नानन्तप्रदेशेषु चित्प्रतिबिम्बो जीव इति केचित्। 'जीवेशावाभासेन करोति', 'माया चाविद्या च स्वयमेव भवति' इति श्रुतिसिद्धौ मूलप्रकृतेस्त्रिगुणात्मिकाया द्वौ रूपभेदौ रजस्तमोनभिभूतशुद्धसत्त्वप्रधाना माया, तदभिभूतमलिनसत्त्वप्रधानाऽविद्येति मायाविद्याभेदं परिकल्पयित्वा मायाप्रतिबिम्ब ईश्वरोऽविद्याप्रतिबिम्बो जीव इति केचिद्वर्णयन्ति। एकैव मूलप्रकृतिर्विक्षेपप्राधान्येन मायाशब्दितेश्वरोपाधिः। आवरणप्राधान्येनाविद्याऽज्ञानशब्दिता जीवोपाधिरिति केचित्। 'कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः' इति श्रुतिमनुसृत्याविद्यायां चित्प्रतिबिम्ब ईश्वरः, अन्तःकरणे चित्प्रतिबिम्बो जीव इति केचित्। एवमुक्तेष्वेतेषु जीवेश्वरयोः प्रतिबिम्बविशेषत्वपक्षेषु यद्बिम्बस्थानीयं ब्रह्म तन्मुक्तप्राप्यम्।

६ श्रीधरीव्याख्या।

प्रसिद्धमेतत्। तथापि ये मामेवेत्येवकारेणाव्यभिचारिण्या भक्त्या प्रपद्यन्ते भजन्ति ते मायामेतां दुस्तरामपि तरन्ति। ततो मां जान-

७ अभिनवगुप्ताचार्यव्याख्या।

मित्यर्थः। तेन सत्त्वादीनां वस्तुतः संविन्मात्रपरब्रह्मानतिरिक्ततायामपि यत्तदतिरिक्तभावगमनं तदेव गुणत्वं प्रोक्तं तत्र पारतन्त्र्यं भोक्-

१ श्रीमच्छांकरभाष्यम्।

**ऽतिक्रमणं यस्याः सा दुरत्यया। तत्रैवं सति सर्वधर्मान्परित्यज्य मामेव मायाविनं स्वात्मभूतं**

२ आनन्दगिरिव्याख्या।

**दुरत्ययत्वं विभजते—दुःखेनेति। मामेवेत्यादि व्याचष्टे—तत्रेति। तस्मिन्मायारूपे यथोक्तरीत्या दुरत्यये सतीति यावत्। मामेवेत्येवकारेण मायाया वेद्यकोटिनिवेशाभावो विवक्ष्यते, सर्वात्मना कर्मानुष्ठानादिव्यग्रतामन्तरेणेत्यर्थः। मायातिक्रमे मोहातिक्रमो भवतीति मत्वा विशिनष्टि—सर्वेति। मायातत्प्रयुक्तमोहयोरतिक्रमेऽपि कथं**

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

अयस्कान्तमनुरुध्येव लोहशलाका। इदमेव ईश्वराधीनत्वं मायायाः। ईश्वरस्य च मायाद्वारा सर्वस्रष्टृत्वमपि। तथाच श्रुतिः 'तस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः' इति। तथाचैकैव माया जीवेश्वरयोरुपाधिर्दर्पण

४ मधुसूदनीव्याख्या।

भिप्रायेण तु ममेति भगवतोक्तम्। यद्यप्यविद्याप्रतिबिम्ब एक एव जीवस्तथाप्यविद्यागतानामन्तःकरणसंस्काराणां भिन्नत्वात्तद्भेदेनान्तःकरणोपाधेस्तस्यात्र भेदव्यपदेशो 'मामेव ये प्रपद्यन्ते', 'दुष्कृतिनो मूढा न प्रपद्यन्ते', 'चतुर्विधा भजन्ते माम्' इत्यादिः। श्रुतौ च 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्' इत्यादिः। अन्तःकरणोपाधिभेदापर्यालोचने तु जीवत्वप्रयोजकोपाधेरेकत्वादेकत्वेनैवात्र व्यपदेशः। 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु', 'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि', 'ममैवांशो जीवलोके जीवभूतः सनातनः' इत्यादिः। श्रुतौ च 'ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मा-

५ भाष्योत्कर्षदीपिका।

अन्येतु जीव ईश्वरः शुद्धा चिदिति त्रैविध्यप्रक्रियां विहाय वस्तुत एकस्यैवाकाशस्य घटाकाशजलाकाशमहाकाशमेघाकाशभेदाच्चातुर्विध्यमिवैकस्यैव चैतन्यस्य कूटस्थजीवब्रह्मेश्वरभेदेन चातुर्विध्यं परिकल्प्य धीवासनोपरक्ताज्ञानोपाधिरीश्वरः, अन्तःकरणोपाधिर्जीव इति दर्शयन्ति। अन्येतु 'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते। आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति॥' इति स्मृत्या एकस्यैवाज्ञानस्य जीवेश्वरविभागोपाधित्वप्रतिपादनाद्बिम्बप्रतिबिम्बभावेन जीवेश्वरयोर्विभागो नोभयोरपि प्रतिबिम्बभावेनोपाधिद्वयमन्तरेणोभयोः प्रतिबिम्बत्वायोगात्। तत्रापि प्रतिबिम्बो जीवः बिम्बस्थानीय ईश्वर इति। सच प्रतिबिम्बभूतो जीव एवाविद्योपाधिक एकमेव तदज्ञानं तदज्ञानकल्पितं च सर्वं जगत्तस्य स्वप्नदर्शनवद्यावदविद्यं सर्वो व्यवहारः। बद्धमुक्तव्यवस्थापि नास्ति जीवस्यैकत्वात्। शुकमुक्त्यादिकमपि स्वाप्नपुरुषान्तरमुक्त्यादिकमिव कल्पितमिति वर्णयन्ति। परेतु रूपानुपहितप्रतिबिम्बो न युक्तः। सुतरां नीरूपे। ननु नीरूपस्य गगनस्य जलादौ प्रतिबिम्बानुभवान्नीरूपस्य न प्रतिबिम्ब इति नास्ति नियम इति चेन्न। आलोकप्रतिबिम्बे गगनप्रतिबिम्बत्वव्यवहारस्य भ्रममात्रमूलकत्वात्। ध्वनिधर्माणामुदात्तादिस्वराणां संनिधिमात्रेण व्यञ्जकतया वर्णेष्वारोपोपपत्त्या वर्णप्रतिबिम्बोपाधिकत्वकल्पनाया निष्प्रमाणकत्वेन ध्वनौ वर्णप्रतिबिम्बत्ववादोऽप्ययुक्तः। तस्माच्चाक्षुषस्यैव चाक्षुष एव प्रतिबिम्ब इति नियमस्य न क्वापि भङ्गोऽस्ति। चन्दनखण्डादिप्रतिबिम्बे चाक्षुषगुणानामेवानुभवात्। तदाघ्राणेऽपि सौरभाननुभवाच्च। मुखादिप्रतिबिम्बेऽपि चाक्षुषगुणानामेवोपलम्भो नतु मुखोच्चारितशब्दस्य। ननु गुहादिषु प्रतिध्वनिरूपस्य ध्वनिप्रतिबिम्बस्योपलम्भ इति चेन्न। पञ्चीकरणप्रक्रियायां दुन्दुभिसमुद्रदावानलझंझामारुतादिध्वनीनां पृथिव्यादिशब्दत्वेन प्रतिध्वनेरेवाकाशगुणत्वात्तस्यान्यशब्दप्रतिबिम्बत्वानुपपत्तेः। नच वर्णात्मकप्रतिशब्दस्य पूर्ववर्णप्रतिबिम्बत्वमिति वाच्यम्। मूलध्वनिवदेव प्रतिध्वनेरपि वर्णाभिव्यञ्जकत्वोपपत्तेः। तस्मात् घटाकाशवदन्तःकरणाद्यवच्छिन्नं चैतन्यं जीवः। तदनवच्छिन्न ईश्वर इति। नचैवं 'यो विज्ञाने तिष्ठन्विज्ञानमन्तरो यमयति' इत्यादिश्रुत्या ईश्वरस्यान्तर्यामिभावेन विकारान्तरावस्थानबोधकया विरोधः। ब्रह्माण्डान्तर्वर्तितत्तदन्तःकरणोपाधिभिस्तदन्तर्वर्तिचैतन्यस्य सर्वात्मना जीवभावेनावच्छेदात् तदवच्छेदरहितचैतन्यात्मकस्येश्वरस्य ब्रह्माण्डान्तःसत्त्वानापत्तेः। प्रतिबिम्बपक्षे तु जलगतस्वाभाविकाकाशे सत्येव प्रतिबिम्बाकाशदर्शनादेकत्र द्विगुणीकृत्य वृत्तिरुपपद्यत इति वाच्यम्। अविद्याश्रयत्वान्तःकरणसंवलितत्वाद्युपाधिकाज्जीवादविद्याविषयत्वान्तःकरणासंवलितत्वाद्युपाधिकस्यान्तर्यामिणो भेदेनावस्थानस्योपपत्त्या श्रुतिविरोधाभावात्। प्रतिबिम्बपक्षे तु अन्तर्यामिब्राह्मणस्यासामञ्जस्यं बहिस्थपाषाणादिवत् जलान्तर्वर्तिपाषाणादेः जले प्रतिबिम्बादर्शनादुपाध्यन्तर्गतस्यैव चैतन्यस्य प्रतिबिम्ब इत्यवश्याङ्गीकर्तव्यत्वेन बिम्बभूतस्य विकारान्तरावस्थानायोगात्। एकत्र द्विगुणीकृत्यवृत्तिरित्यपि न। 'षडस्माकमनादयः' इति सिद्धान्ते जीवेश्वरभिन्नत्वेनाभ्युपगतस्य जीवादिसर्वप्रपञ्चविवर्ताधिष्ठानत्वेन सर्वगतस्य शुद्धचैतन्यस्याप्यन्तःकरणे सत्त्वस्यावर्जनीयत्वेन जीवोऽन्तर्यामी शुद्धचैतन्यं चेति एकत्र त्रिगुणीकृत्य वृत्तेरुपपादनीयत्वापत्तेः। नचावच्छेदपक्षे 'यथा स्वयंज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्। उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा', 'अतएव चोपमा सूर्यकादिवत्' इति श्रुतिसूत्रविरोध इति वाच्यम्। भाष्यकारैरेव 'अतएवे'ति सूत्रं व्याख्याय सूर्यादिवदात्मनः प्रतिबिम्बो न युज्यते इति तदाक्षेपकत्वेन 'अम्बुवदग्रहणात्तु न तथात्वम्' इति सूत्रं व्याख्याय 'ततो वृद्धि-

७ अभिनवगुप्ताचार्यव्याख्या।

त्वम्। तच्च भेदात्मकं रूपं संसारिभिरनिर्वाच्यतया तान्प्रति मायारूपम्। अतो ये परमार्थब्रह्मप्रकाशविदस्ते तदनतिरिक्तं विश्वं पश्यन्तो

